॥ कपिलमुनिप्रणीत तत्त्वसमास ॥

अथातस्तत्त्वसमासः ॥ १॥

अष्टौ प्रकृतयः ॥ २॥

षोडश विकाराः ॥ ३॥

पुरुषः ॥ ४॥

त्रैगुण्यम् ॥ ५॥

सञ्चरः प्रतिसञ्चरः ॥ ६॥

अध्यात्ममधिभूतमधिदैवं च ॥ ७॥

पञ्चाभिबुद्धयः ॥ ८॥

पञ्च दृग्योनयः ॥ ९॥

पञ्च वायवः ॥ १०॥

पञ्च कर्मात्मानः ॥ ११॥

पञ्चपर्वा अविद्या ॥ १२॥

अष्टाविंशतिधाऽशक्तिः ॥ १३॥

नवधा तुष्टिः ॥ १४॥

अष्टधा सिद्धिः ॥ १५॥

दश मौलिकार्थाः ॥ १६॥

अनुग्रहः सर्गः ॥ १७॥

चतुर्दशविधो भूतसर्गः ॥ १८॥

त्रिविधो बन्धः ॥ १९॥

त्रिविधो मोक्षः ॥ २०॥

त्रिविधं प्रमाणम् ॥ २१॥

एतत् सम्यग् ज्ञात्वा कृतकृत्यः स्यात् ।

न पुनस्त्रिविधेन दुःखेनाभिभूयते ॥ २२॥

